

श्रीसुदर्शनभगवान

श्रीरस्तु

श्रीरंगदिव्यदम्पतिभ्यां नमः

# सुदर्शनशतकम्

श्रीमदुभयवेदान्ताचार्य पीठ प्रचारार्थं

एवं

श्रीमद्रामानुजसहस्राब्दिसमये प्रकाशितम्

सम्पादक—

पं० श्री नि० खगेन्द्राचार्यः

श्रीफलाहारीजीयरस्वामीमठ, "श्रीरंगम्', ६२०००६

* श्रीमते रामानुजाय नमः *

॥ श्रीवानाचलमुनीन्द्राय नमः ॥



# श्रीसुदर्शनशतकम्

श्रीवानमामलै (तोताद्रि) जीयर स्वामी

चरणचंचरीक

श्रीवैकुण्ठवासी बद्रीप्रपन्नरामानुजदासस्य

पुण्यस्मृतौ प्रकाशितम्



श्री वै० वा० श्रीबद्रीप्रपन्नस्वामी
श्रीसत्यनारायणमन्दिर, लक्ष्मणझूला

तृतीयावृत्ति १०००

श्रीमद्वरवरमुनि जयन्ती
२७-१०-७६

* श्रीमते रामानुजाय नमः *

# शास्त्रीय वचन

**दीक्षा—** तप्तचक्राङ्कहीनाय नायं दद्यात् कदापिहि । प्राचीनपथभ्रष्टाय दानाद्धानिर्भवेद् ध्रुवम् ।।
**मौन—** मनः प्रवरणं शौचं मौनं मन्त्रार्थ चिन्तनम् । अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ।।
**जितेन्द्रिय—**धीरोधृतव्रतः मौनी जितक्रोधो जितेन्द्रियः । धौतवासास्त्वधः शायी विष्णुलोके महीयते ।।
**स्थल—** गृहे चैकगुणः प्रोक्तो गोष्ठे दशगुणः स्मृतः । अयुतं पर्वते पुण्ये नद्यां लक्षगुणो जपः ।।
कोटिर्देवालये प्राप्ते अनन्तो विष्णुसन्निधौ । सिद्धिपीठे तुलस्याग्रे वटपिप्पलसिद्धिदः ।।

श्रीसुदर्शनशतक समस्त श्रीवैष्णव वैदिक जगत के लिये अपूर्व रत्न है। इसकी रचना कार्य विशेष से एक बड़ी विपत्ति के समय श्रीरङ्गनिवासी, श्रीरङ्गनाथ भगवान के परम भक्त एवं उत्कृष्ट विद्वान् श्रीकूरनारायण मुनि ने लगभग आठ शताब्दी पूर्व की थी।

इसका पाठ एवं सविधि अनुष्ठान, शीघ्र ही इच्छित फल को देने वाला है। तबसे लेकर आज तक आराधक भक्त अर्थ, धर्म, काम, मोक्ष की भावनाओं से सफल अनुष्ठान विधिवत् करते चले आ रहे हैं। वस्तुतः श्रीसुदर्शनराज के महत्व एवं विलक्षण चमत्कारोंसे समस्त संस्कृत वाङ्मय भरा हुआ है। इसमें दिये गये सौ श्लोक सौ प्रकार के ही मनोवाञ्छित फलों के देने वाले हैं, जोकि दुर्लभ से दुर्लभ कार्य की सिद्धि, अन्य सभी प्रकार की आधि-व्याधियों को नष्ट करके आयु आरोग्य,

धन-धान्य देते हैं। श्रीसुदर्शनशतक स्तोत्र अति कठिन और भाव गम्भीर है, किसी भी वैदिक या पौराणिक स्तोत्रादि का पाठ अर्थानुसन्धानपूर्वक करने के लिये विद्वान मन्त्रद्रष्टा आचार्य से सविधि अध्ययन करना आवश्यक है। पुस्तक से पढ़के वा परोक्ष में या छल-कपट से सुना अयोग्य अवैष्णव चक्राङ्कन हीन से लिया हुआ अनर्थकारी होता है। जिस मन्त्र का जप या सिद्धि करनी हो, उसके लिये उसके अनुरूप होकर पूजनादि जैसे "देवो भूत्वा देवं यजेत्" होना आवश्यक है।

अनुष्ठान के लिये आसन, सिद्धि सङ्कल्प, मन्त्र, मन, अन्न, द्रव्य, स्थल (क्षेत्र) शरीर शुद्ध हों। देवता पाँच जगह वसता है जैसे, १–मन्त्र, २–मण्डल, ३–जल, ४–अग्नि, ५–मूर्ति या यन्त्र। इन पाँचों को सविधि एकत्रित करके अनुष्ठान करना चाहिये।

**१—मन्त्र या स्तोत्र**—अर्थ सहित शुद्ध सस्वर परम्परागत आचार्य से प्राप्त और दृढ़ विश्वास निष्ठायुक्त हो।

**२—मण्डल**—अनुष्ठान को सिद्धि के लिये विधिवत मण्डल (चक्राब्जादि) की रचना।

**३—जल**—सर्वालङ्कारयुक्त कलश स्थापन पूजन (जिस देव का अनुष्ठान हो वैसा) तर्पण।

**४—अग्नि**—जिस देव का अनुष्ठान हो उसकी समिधा और उसी प्रकार का साकल्य, उन मन्त्रों से अग्निकुण्ड में यथोचित आहुति देवे। कुण्ड के अभाव में वेदी भी हो सकती है।

**५—मूर्ति या यन्त्र**—अनुष्ठान से सम्बन्धित मूर्ति या यन्त्र "सुवर्णप्रतिमां कृत्वा तां स्मरेत् ताञ्च पूजयेत् ।" सुवर्ण का कम से कम कनिष्ठ चार आने ( ३ ग्राम ) की मूर्ति या यन्त्र बनवा कर ( यन्त्र सही हो ) उसका नित्य सर्वोपचार से पुण्याहवाचनादि सहित पूजन करना चाहिये ।

मन्त्र में जितने अक्षर हों उतने ही लक्ष जाप का पुरश्चरण होता है । कलियुग में चतुर्गुण बताया है । जप से दशांश होम, होम से दशांश तर्पण, तर्पण से दशांश मार्जन, मार्जन से दशांश श्रीवैष्णव भोजन । कहीं जप से द० तर्पण द० होम है । सुदर्शन कवच में २४ श्रीवैष्णव भोजन का उल्लेख है । द्रव्य के अभाव में दशांश जाप अधिक करने का भी विधान है ।

अनुष्ठानी को चाहिये, जितेन्द्रिय जितक्रोधी, सत्यवादी, परनिन्दा परस्तुतिहीन, परान्न व श्राद्ध का भोजन न करे, क्षौर, नख, काटे नहीं, त्रिकाल स्नान सन्ध्या करे, आहार शुद्ध, दीपक जलता रहे, मूर्ति या यन्त्र हो तो अन्न का नैवेद्य लगावे । असक्त व्यक्ति स्वयं न कर सके तो उपरोक्त गुणयुक्त योग्य विद्वान के द्वारा कराये तो जैसा अपना शरीर है वैसा ही उस आचार्य को मानकर द्रव्यादि से सब सुविधा देवे, "यथादेहे तथादेवे ।" अर्थ से हीन ऋत्विक्, मन्त्रहीन आचार्य ये दोनों ही कार्य की हानि करने वाले कहे गये हैं ।

"स्वाति चित्रा चतुर्दश्यां गुरौ वा शनिवासरे" श्रीसुदर्शन भगवान का चित्रा नक्षत्र शनिवार चतुर्दशी तिथि है, श्रीसुदर्शनशतक की १०० से एक सहस्र अखण्ड पाठ करने पर तत्काल सिद्धि

मिलती है। ११ पाठ, नित्य ४० दिन करने से १ मण्डल होता है। जिस कार्य की सिद्धि करनी हो उसका सम्पुट देने का विधान है। नित्य क्रम से पूजन, कवच, जाप, पाठ, अर्चना ये पञ्चाङ्ग अनुष्ठान के अङ्ग हैं, जिन्हें नित्य बराबर करे। न्यास और ध्यान, १ बार पहले करके फिर पाठ मात्र यथा संख्या करता जावे। इसी प्रकार माहात्म्य भी एक ही बार पाठ करें, अन्तिम व पूर्व।

इस पुस्तक का प्रकाशन श्रीवैकुण्ठवासी श्रीबद्रीप्रपन्न स्वामी, लक्ष्मणझूला सत्यनारायण मन्दिर के भण्डारीजी की पुण्य स्मृति में किया है। प्रेस की या प्रूफ संशोधन में कोई त्रुटि रही हो उसे सुधारकर ही पाठ करें, यह प्रार्थना है। अस्तु।

नोट—अन्य देवतान्तर अनुष्ठान करने पर यदि सफलता न मिले तो किया हुआ श्रम और व्यय सब व्यर्थ होता हैं, परन्तु भगवत सम्बन्धित अनुष्ठान अवश्य ही सफल होता है, कदाचित प्रारब्ध विशेष से सफल न हो तो किया हुआ परिश्रम और द्रव्य व्यर्थ नहीं होता, फल तो अवश्य ही मिलता है।





अ० भाद्र पूर्णिमा २०३१ —पं० श्री नि० खगेन्द्राचार्य

॥ श्रीः ॥

# श्रीसुदर्शनपूजाक्रमः

## पवित्रकरणम्

ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

## आसनप्रतिष्ठा

ॐ पृथ्वि ! त्वया धृता लोका देवि ! त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

त्रिराचम्य प्राणानायम्य पवित्रिधारणं कुर्यात् । पश्चात् श्रीगुरुपरम्परां स्मरेत ।

श्रीशैलेशदयापात्रं धीभक्त्यादि गुणार्णवम् । यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

रम्यजामातृयोगीन्द्रपादरेखामहं सदा । तदायत्तात्मसत्तादि रामानुजमुनिं भजे ॥

यस्य द्विरदवक्त्राद्याः पारशद्याः परश्शतम्।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

अनन्तरं संकल्पं कुर्यात्

## संकल्पम्

श्रीगोविन्द गोविन्द ॐ तत्सदद्य, अस्य श्रीगरुडानन्तविष्वक्सेनादिनित्यसूरि गौतमादि सप्तर्षि पराङ्कुशपरकालरामानुजयतीन्द्रादि संसेवितस्य, श्रीभूनीलादेवी-सहितस्य, अभिनवजलधरसुन्दरदिव्यमंगलविग्रहविशिष्टस्य, अखिलकोटिब्रह्माण्ड-नायकस्य, श्रीमन्नारायणस्य, इच्छया, नाभिकमलोद्भूत सकललोकपितामहस्य, ब्रह्मणः सृष्टिकुर्वतस्तदुद्धरणाय प्रार्थितस्य ह्यस्मिन् महति ब्रह्माण्डखण्डे, श्रीमदादिवराहदंष्ट्राग्र-विराजितेऽस्मिन् भूर्लोके जम्बूद्वीपे सुमेरोर्दक्षिणदिग्भागे भारतवर्षे अ०पुण्यक्षेत्रे, अ०देशे, ( अ० नगरे ) गङ्गायमुनायाः अ० दिग्भागे अ० तीर्थतटे वा सन्निधौ सकल जगत्सृष्टुः परार्धं द्वितीय जीवती ब्रह्मणो द्वितीय परार्धे एक पञ्चाशत्तमे वर्षे, प्रथमे मासे, प्रथमपक्षे

प्रथमदिवसे दिनस्य द्वितीये यामे, तृतीये मुहूर्ते, अष्टमे श्वेतवाराहकल्पे, स्वायम्भुवस्वारोचिषउत्तमतामसरैवतचाक्षुषाख्येषु षटसु मनुष्वतीतेषु, सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे द्वापरान्ते श्रीकृष्णावतारे राजन्यचक्रचूडामणिविश्वसम्राट्धर्मावतार श्रीयुधिष्ठिरसम्वत्सरे वर्तमाने, कलियुगे, कलिप्रथमचरणे, श्रीमन्नृपतिविक्रमार्क राज्यात् वर्तमाने अमुकसंख्याके ··एवं श्रीमद्रारामानुजमुनिप्रादुर्भावात् अ० ···संख्याके अमुकनाम··· संवत्सरे, अमुक···अयने अ०···ऋतौ मासानामासोत्तमे अ० मासे अ० पक्षे अ० तिथौ अ० वासरे अ० नक्षत्रे अ० ··योगे, अ०···करणे, अ० ··राशिस्थिते चन्द्रे, अ० राशिस्थिते श्रीसूर्ये अ० ··राशिस्थिते श्रीदेवगुरौ, शेषेषु ग्रहेषु यथा यथा स्थानस्थितेषु सत्सु एवंग्रहगुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ ·अ० गोत्रे, अ० प्रवरे, अ० राशि अ० नक्षत्र जातः अ० नाम शर्माहं (गुप्तोऽहं) ममोत्पातदुरितक्षय द्वारा समस्तपुरुषार्थसिध्यर्थं, मम सकुटुम्बस्य दीर्घायु-आरोग्य दृढ़गात्र प्रसादसिध्यर्थं सर्वारिष्टनिवृत्तिपूर्वकं श्रीभगवदाज्ञया भगवत्कैङ्कर्यरूपं श्रीसुदर्शनचक्रराजप्रसादसिध्यर्थं यथाशक्ति यथाज्ञान मिलितोपचारैः श्रीसुदर्शन यन्त्रपूजनं श्रीसुदर्शनशतकपारायणञ्च करिष्ये।

अथवा ( यजमानार्थनम् ) अमुकगोत्रराशिनक्षत्रोद्भवस्य अमुकनाम यजमानस्य करिष्यामि ।

करन्यासः—

ह्रां अंगुष्ठाभ्यां नमः
ह्रीं तर्जनीभ्यां नमः
ह्रूं मध्यमाभ्यां नमः
ह्रैं अनामिकाभ्यां नमः
ह्रौं कनिष्ठिकाभ्यां नमः
ह्रः करतलकर पृष्ठाभ्यां नमः

हृदयादिन्यासः—

ह्रां हृदयाय नमः
ह्रीं शिरसे स्वाहा
ह्रूं शिखायै वषट्
ह्रैं कवचाय हुम्
ह्रौं नेत्रत्रयाय वौषट्
ह्रः अस्त्राय फट्

॥ अथ दशदिग्बन्धः ॥

ॐ नमो भगवते ज्वालाचक्राय ऐन्द्रीं दिशं चक्रेण बध्नामि ॥ १ ॥
ॐ नमो भगवते ज्वालाचक्रायाग्नेयीं दिशं चक्रेण बध्नामि ॥ २ ॥
ॐ नमो भगवते ज्वालाचक्राय दक्षिणां दिशं चक्रेण बध्नामि ॥ ३ ॥

ॐ नमो भगवते ज्वालाचक्राय निर्ऋतिं दिशं चक्रेण बध्नामि ॥ ४ ॥

ॐ नमो भगवते ज्वालाचक्राय वारुणीं दिशं चक्रेण बध्नामि ॥ ५ ॥
ॐ नमो भगवते ज्वालाचक्राय वायव्यदिशं चक्रेण बध्नामि ॥ ६ ॥
ॐ नमो भगवते ज्वालाचक्राय कौवेरीं दिशं चक्रेण बध्नामि ॥ ७ ॥
ॐ नमो भगवते ज्वालाचक्राय ईशानदिशं चक्रेण बध्नामि ॥ ८ ॥
ॐ नमो भगवते ज्वालाचक्राय ऊर्ध्वदिशं चक्रेण बध्नामि ॥ ९ ॥
ॐ नमो भगवते ज्वालाचक्राय अधोदिशं चक्रेण बध्नामि ॥१०॥
ॐ नमो भगवते कोटिसूर्यप्रकाशाय भूर्भुवः स्वरोमिति सर्वं दिग्बन्धनं कुर्यात् ॥

॥ अथ ध्यानम् ॥

शङ्खं चक्रं च चापं परशुमसिमिषुं शूलपाशांकुशांश्च-
विभ्राणं वज्रखेटं हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिनेत्रं ज्वलदनलनिभं हारकेयूर भूषं-
ध्यायेत्षट् कोणसंस्थं सकलरिपुकुलप्राणसंहारचक्रम् ॥१॥

अस्मिन् श्रीसुदर्शन यन्त्रेसु ( पुस्तक कोशेसु ) श्रीसुदर्शनं आवाहयामि,

आसनं समर्पयामि, पादयोः पाद्यं समर्पयामि, हस्तयोः अर्घ्यं समर्पयामि, आचमनीयं समर्पयामि, ॐ भूर्भुवस्सुवः स्नापयामि, पञ्चामृत स्नानं समर्पयामि, कावेरी जलस्नापयामि, स्नानान्तरं आचमनीयं समर्पयामि, वस्त्रोपवस्त्र स०, उपवीतं स० सर्वाभरण स० दिव्यपरिमल–गन्धान्धारयामि, हरिद्रा कुङ्कुमं स० अक्षतान् स० पुष्पाणि समर्पयामि, धूपं आघ्रापयामि, दीपं दर्शयामि, पुष्पैः पूजयामि ।

## ॥ श्रीसुदर्शनाष्टोत्तरशतनामावलिः ॥

ओं सुदर्शनाय नमः
चक्रराजाय
तेजोव्यूहाय
महाद्युतये
सहस्रबाहवे
दीप्ताङ्गाय
अरुणाक्षाय

ओं प्रतापवते नमः
अनेकादित्यसङ्काशाय
प्रोद्यज्ज्वालाभिरञ्जिताय
सौदामिनीसहस्राभाय
मणिकुण्डलशोभिताय
पञ्चभूतमनोरूपाय
षट्कोणान्तरसंस्थिताय

ओं हरान्तः करणोद्भूत-रोषभीषणविग्रहाय नमः
१० हरिपाणिलसत्पद्म-विहारारमनोहराय
श्राकाररूपाय
सर्वज्ञाय
सर्वलोकार्चितप्रभवे

ओं चतुर्दशसहस्राराय नमः
चतुर्वेदमयाय
अनलाय
भक्तचान्द्रमसज्योतिषे
भवरोगविनाशकाय
रेफात्मकाय
मकाराय
रक्षोसृक्रूषिताङ्गकाय
सर्वदैत्यग्रीवनाल-
विभेदनमहागजाय
भीमदंष्ट्राय
उज्ज्वलाकाराय ३०
भीमकर्मणे
त्रिलोचनाय

२० ओं नीलवर्त्मने नमः
नित्यसुखाय
निर्मलश्रियै
निरंजनाय
रक्तमाल्यांबरधराय
रक्तचन्दनरूषिताय
रजोगुणाकृतये
शूराय ४०
रक्षःकुलयमोपमाय
नित्यक्षेमकराय
प्राज्ञाय
पाषण्डजनखण्डनाय
नारायणाज्ञानुवर्तिने
नैगमान्तःप्रकाशकाय

ओं बलिनन्दनदोर्दण्ड
विजयाकृतये [ खण्डनाय नमः
मित्रभाविने
सर्वमयाय ५०
तमोविध्वंसकाय नमः
रजस्सत्वतमोद्वर्तिने
त्रिगुणात्मने
त्रिलोकधृते
हरिमायागुणोपेताय
अव्ययाय
अक्षस्वरूपभाजे
परमात्मने
परंज्योतिषे
पञ्चकृत्यपरायणाय ६०

ओं ज्ञानशक्तिबलैश्वर्य-
वीर्यतेजःप्रभामयाय नमः
सदसत्परमाय
पूर्णाय
वाङ्मयाय
वरदाय
अच्युताय
जीवाय
गुरवे
हंसरूपाय
पञ्चाशत्पीठरूपकाय ७०
मातृकामण्डलाध्यक्षाय
मधुध्वंसिने
मनोमयाय

ओं बुद्धिरूपाय नमः
चित्तसाक्षिणे
साराय
हंसाक्षरद्वयाय
मन्त्रयन्त्रप्रभावज्ञाय
मन्त्रयन्त्रमयाय
विभवे ८०
स्रष्ट्रे
क्रियास्पदाय
शुद्धाय
आधाराय
चक्ररूपकाय
निरायुधाय
असंरम्भाय

ओं सर्वायुधसमन्विताय नमः
ओंकाररूपिणे
पूर्णात्मने ९०
ओंकारसाध्यबन्धनाय
ऐंकाराय
वाक्प्रदाय
वाग्मिने
श्रींकारैश्वर्यवर्धनाय
क्लींकारमोहनाकाराय
हुं फट्क्षोभणाकृतये
इन्द्रार्चितमनोवेगाय
धरणीभारनाशकाय
वीराराध्याय १००
विश्वरूपाय

ओं वैष्णवाय नमः ओं सत्यपराय नमः ओं सुदर्शनाय नमः

विष्णुरूपकाय सत्यधर्मानुषङ्गकाय सर्वाभीष्टफलप्रदाय नमः १०८

सत्यव्रताय नारायणकृपाव्यूहतेजश्चक्राय

श्रीविजयवल्ली समेत श्री चक्रराजपरब्रह्मणे नमः हरिः ओम् ।

नानाविधपरिमलपत्रपुष्पाणिसमर्पयामि ।



नैवेद्यम्–ॐ भूर्भुवस्सुवः + प्रचोदयात् । देवसवितः प्रसुवः । सत्यं त्वर्तेन परिषिञ्चयामि । अमृतोपस्तरणमसि । ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा' ॐ व्यानाय स्वाहा, ॐ उदानाय स्वाहा, ॐ समानाय स्वाहा, श्रीसुदर्शनाय नमः । मध्ये मध्ये अमृतपानीयं समर्पयामि, अमृता-पिधानमसि । हस्तप्रक्षालनम् स ०। पादप्रक्षालनम् स० । आचमनीयं स० । उत्तरा पोषणं स० । करोदवर्तनार्थे चन्दनं स ० । कदली ( ऋतु ) फलं निवेदयामि-—

पूगीफलसमायुक्तं नागवल्ली-दलैर्युतम् । कर्पूर-चूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

ताम्बूलंपूगीफलं निवेदयामि । सर्वोपचारार्थे सुवर्णपुष्पदक्षिणाद्रव्यं समर्पयामि ।



# * आरती *



मङ्गलं चक्रराजाय महनीयगुणाब्धये । पद्मनाभकरांभोजपरिष्काराय मङ्गलम् ॥ १ ॥
काशीविप्लोषकाराय कल्याणगुणशालिने । मालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥
गजेन्द्रार्तिहरायास्तु ग्राहद्वेधात्वकारिणे । दिनाधीशतिरोधानकर्त्रे दीप्ताय मङ्गलम् ॥
चित्रकारस्वचाराय चित्तनिर्वृतिकारिणे । नरकासुरसंहर्त्रे नानारूपाय मङ्गलम् ॥
चण्डस्ताञ्चितदोर्दण्डखण्डितामरशत्रवे । चामीकरनिभाङ्गाय चारुनेत्राय मङ्गलम् ॥
चैद्यासुरशिरोहर्त्रे चन्द्राह्लादकराय च । श्रीमते चक्रराजाय श्रितार्तिघ्नाय मङ्गलम् ॥

नीराजनानन्तरं – आचमनीयं स० रक्षां ( सूत्र ) धारयामि, मन्त्रपुष्पं समर्पयामि—

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यम् कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ॥ ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं

समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषः आन्तादापरार्धात्। पृथिव्यै समुद्रपर्यन्ताया एकराडिति। तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुतस्यावसन् गृहे। आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासदः।

ॐ विश्वाय नमो विश्व पालाय नमो विश्व कालाय नमः काल कालाय नमः। सर्वाय नमः सर्व रूपाय नमः सर्व भूपाय नमः सर्व हराय नमः॥ सर्व चराय नमः सर्व कराय नमो नमः॥

ॐ सुदर्शनाय विद्महे, हेतिराजाय धीमहि, तन्नोचक्रः प्रचोदयात्॥ (मन्त्रपुष्पाञ्जलिं समर्पयामि। प्रदक्षिणानमस्कारान् समर्पयामि।

पापोऽहं पापकर्माहं पापात्मापापसंभवः। त्राहि मां पुण्डरीकाक्ष! सर्वपाप हरो भव॥
अपराधसहस्रभाजनं पतितं भीम भवार्णवोदरे। अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु॥

## * अथ श्रीसुदर्शन षडक्षरमन्त्रजपविधिः (द्वितीय) *

**ओम्. अस्य श्रीसुदर्शनमहामन्त्रस्य, अहिर्बुध्न्यो भगवानृषिरनुष्टुप्छन्दः। श्रीसुदर्शन चक्रराजो भगवान् देवता। क्षौं महाज्वालाय बीजम्। क्लीं शत्रुमर्दनाय-शक्तिः। क्लीं सर्वभयनिवारणाय कीलकम्। श्रीभगवत्कैंकर्ये बाधानिवृत्तिपूर्वकम् अविच्छिन्नसन्तानेन विवृध्यर्थं षट्कोणमध्यस्थितविष्णुचक्रमन्त्रजपे विनियोगः।**

* अथाङ्गन्यासः *

ॐ सं मूर्न्धि, ॐ हं भ्रूमध्ये, ॐ स्त्रां मुखे, ॐ रं हृदि, ॐ हुं नाभौ, ॐ फट् जान्वोः। ( सहस्त्रार हुं फट् ) इति मन्त्रः।

* अथ करन्यासः *

रां रणत्किंकिणीज्वालाय अंगुष्ठाभ्यांनमः। रीं रिपुदावानलाय तर्जनीभ्यां नमः। रुं राक्षसभयनिवारणाय मध्यमाभ्यां नमः। रैं रक्षोत्सादनाय अनामिकाभ्यां नमः। रौं रण भीषणायक निष्ठिकाभ्यां नमः। रः रक्तमाल्याम्बरधराय करतलकर-पृष्ठाभ्यां नमः।

* अथ हृदयादिन्यासः *

रां राक्षसविध्वंसकाय हृदयाय नमः। रीं रक्ताक्षाय शिरसे स्वाहा। रुं रुद्रभीषणाय शिखायै वषट्। रैं राक्षसकुलनाशनाय कवचाय हुं। रौं रमेशप्रियाय नेत्राभ्याँ वौषट्। रः रक्तमाल्याम्बरधराय अस्त्राय फट्।



* अथ पञ्चोपचारपूजनम् *

लं, पृथिव्यात्मने वाणासुरमदभञ्जनाय श्रीचन्दनं समर्पयामि ।। १ ।। हं, आकाशात्मने दैत्यदानवमर्दनाय पारिजातपुष्पं समर्पयामि ।। २ ।। यं, वाय्वात्मने दुर्वासोगर्वखण्डनाय सुगन्धदशांगधूपंसमर्पयामि ।। ३ ।। रं, ब्रह्मात्मने वैकुण्ठनिवासाय भक्ष्य भोज्य, लेह्य, चोष्य, गुड़-घृत-दधिक्षीरादिशुभ्रशाल्योदन मोदकाद्यनेकपक्वान्न, कन्दमूलफलाद्यनेकचित्रान्न, पायसनिर्मलस्वादुविरजाजलसंयुक्त श्रीरमाहस्तनिर्मितमणिमयपात्रस्थित श्रीमहाविष्णुनिवेदितमहाप्रसादामृतान्नं समर्पयामि ।। ४ ।। जं, सोमात्मने पूगीफलनागवल्लीदललालवंगकंकोलजातीफलाद्यनेकशतौषधिसहितानेक सुगन्धपरिमलद्रव्य जातीपत्र कस्तूरीकर्पूर गोरोचनमौक्तिकचूर्णमिश्रितलक्ष्मीहस्तनिर्मितस्वर्णपात्रस्थित श्रीधरचर्वणशेषवीटिकां समर्पयामि । ( सहस्रारहुं फट् ) इति षडक्षरमन्त्र अष्टोत्तरशतवारं जपेत् । षड्लक्षात्मक पुरश्चरणः ।। श्रीसुदर्शनाय विद्महे हेतिराजाय धीमहि । तन्नश्चक्रः प्रचोदयात् । इति सुदर्शनगायत्री मन्त्रः ।ॐ क्रों श्रीं एं ह्रीं क्ष्रीं ॐ जय जय सुदर्शननृसिंह प्रें खें रीं ठः स्वाहा।

※ इति पञ्चोपचारपूजनम् ※

## * श्रीसुदर्शनकवचम् *

ॐ अस्य श्रीसुदर्शनकवचमहामन्त्रस्य, भगवानन्तर्यामी नारायणऋषिः, अनुष्टुप्छन्दः, श्रीसुदर्शनरूपी श्रीमन्नारायणो देवता। रं बीजम्: हुं शक्तिः। फट् कीलकम्। श्रीसुदर्शनप्रसादसिद्ध्यर्थे जपे विनियोगः॥

शंखं चक्रं गदां पद्मं मुसलं खड्गमेव च। धेनुं च यमपाशं च मुद्रा ह्येताः प्रकीर्तिताः॥

पाञ्चजन्याय शङ्खाधिपतये नमः। सुदर्शनाय हेतिराजाय नमः। कौमोदक्यै गदाधिपतये नमः। पं पद्माय नमः। मुं मुसलाय नमः। नं नन्दकाय खड्गाधिपतये नमः। सुं सुरभ्यै नमः। यं यमपाशाय नमः॥

ध्यानम्—

शङ्खं शार्ङ्गं सखेटं हलपरशुगदाकुन्तपाशान् दधानं
त्वन्यैर्वामैश्च चक्रेष्वसिमुसललसद्वज्रशूलांकुशाग्नीन्।
ज्वालाकेशं किरीटं ज्वलज्ज्वलननिभं बह्निमध्यस्थपीठं
प्रत्यालीढं त्रिनेत्रं रिपुगणदमनं भावयेच्चक्रराजम्॥

ओं अस्य श्रीसुदर्शनकवचस्तोत्रमहामन्त्रस्य, अहिर्बुध्न्यो भगवानृषिः। अनुष्टुप्छन्दः। श्रीसुदर्शन महाश्रीनृसिंहो देवता। सहस्रारमिति बीजम्। सुदर्शनमिति शक्तिः। चक्रमिति कीलकम्। मम सर्वरक्षार्थे श्रीसुदर्शनपुरुष श्रीनृसिंहप्रीत्यर्थे जपे विनियोगः। ओं आचक्राय स्वाहा अंगुष्ठाभ्यां नमः। ओं विचक्राय स्वाहा तर्जनीभ्यां नमः। ओं सुचक्राय स्वाहा मध्यमाभ्यां नमः। ओं सूर्यचक्राय स्वाहा अनामिकाभ्यां नमः। ओं ज्वालाचक्राय स्वाहा कनिष्ठिकाभ्यां नमः। ओं सुदर्शनचक्राय स्वाहा करतलकरपृष्ठाभ्यां नमः। ओं आचक्राय स्वाहा हृदयाय नमः। ओं विचक्राय स्वाहा शिरसे स्वाहा। ओं सुचक्राय स्वाहा शिखायै वषट्। ओं सूर्यचक्राय स्वाहा बलाय कवचाय हुम्। ओं ज्वालाचक्राय स्वाहा नेत्राभ्यां वौषट्। ओं सुदर्शनचक्राय स्वाहा अस्त्राय फट्। ओं भूर्भुवस्सुवरोमिति दिग्बन्धः॥

ध्यानम्—

शङ्खं चक्रं च चापं परशुमसिमिषुं शूलपाशांकुशास्त्रं
बिभ्राणं वज्रखेटौ हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम्।

ज्वालाकेशं त्रिनेत्रं ज्वलदनलनिभं हारकेयूरभूषं
ध्यायेत् षट्कोणसंस्थं सकलरिपुजनप्राणसंहारसंक्रम् ॥

ओं नमो भगवते सुदर्शनाय-भो भो सुदर्शन दुष्टं दारय दारय । दुरितं हन हन । पापं दह दह । रोगं मर्दय मर्दय । आरोग्यं कुरु कुरु । ओं ओं ह्लां ह्लां ह्लीं ह्लीं ह्लूँ ह्लूँ फट् फट् दह दह हन हन भीषय भीषय स्वाहा ॥

मस्तकं मे सहस्रारः फालं पातु सुदर्शनः । भ्रुवौ मे चक्रराट् पातु नेत्रे द्वेऽर्केन्दुलोचनः ॥१॥

कर्णौ वेदस्तुतः पातु घ्राणं मे सुविभीषणः । महादीप्तः कपोलौ मे ओष्ठौ रुद्रवरप्रदः ॥२॥

दन्तान् पातु जगद्वन्द्यः रसनां मम सर्वदा । सर्वविद्यार्णवः पातु गिरं वागीश्वरो मम ॥३॥

वीरसिंहो मुखं पातु चिबुकं भक्तवत्सलः । सर्वदा पातु कण्ठं मे मेघगम्भीरनिःस्वनः ॥४॥

मम स्कन्धयुगं पातु धराभारापहारकः । बाणासुरभुजारण्यदावाग्निः पातु मे भुजौ ॥५॥

कालनेमिशिरश्छेत्ता पातु मे कूर्परद्वयम् । करौ दिव्यायुधः पातु वज्रानखोपमः ॥६॥



कुक्षौ पातु महाशूरः स्तनौ शत्रुनिषूदनः । पातु मे हृदयं भक्तजनानन्दश्च सर्वदा ॥७॥

सर्वशास्त्रार्थसद्भूतिहेतुः पातूदरं मम । वक्षः पातु महाधारो दिवि दानवमर्दनः ।।८।।
पार्श्वौ मे पातु दीनार्तशरणागतवत्सलः । सर्वदा पृष्ठदेशं मे देवानामभयप्रदः ।।६।।
नाभिं षट्कोणधामा मे पातु घण्टारवः कटिम् । आदिमूलः पुमान् पातु गुह्यदेशंनिरन्तरम्।
ऊरू पातु महाशूरो जानुनो भीमविक्रमः । जङ्घे पातु महावेगो गुल्फौ पातु महाबलः ।।११।।
पादौ पातु सदा श्रीदो ब्रह्माद्यैरभिवन्दितः । पातु पादतलद्वन्द्वं विश्वभारो निरन्तरम् ।।
सुदर्शननृसिंहो मे शरीरं पातु सर्वदा । मम सर्वाङ्गरोमाणि ज्वालाकेशस्स रक्षतु ।।१३।।
मम सर्वाङ्गकान्ति वै कल्पान्ताग्निसमप्रभः । अंतर्बहिश्च मे पातु विश्वात्मा विश्वतोमुखः ।।
रक्षाहीनं च यत्स्थानं प्रचण्डस्तत्त रक्षतु । सर्वतो दिक्षु मे पातु ज्वालाशतपरीवृतः ।।
त्रिनेमिः पातु मे प्राणान् भ्रातृन् पात्वनलद्युतिः। भार्यां लक्ष्मीसखः पातु पुत्रान् पातु सुदर्शनः।
श्रीकरो मे श्रियः पातु बन्धून् पातु बलाधिकः । गोपांश्चैव पशून् पातु सहस्रारधरस्सदा ।।
क्षेत्रं विश्वंभरः पातु मित्रं पात्वघनाशनः । दिवारात्रं च मां पातु अहिर्बुध्न्यवरप्रदः ।।

षोडशोत्तुङ्गबाहुस्तु पातु मे राजसंमुखम् । वैरिविद्वेषसङ्घे तु संग्रामे शत्रुसूदनः ॥१९॥
अवान्तरा अबाधाश्च त्रासयेत्सार्वकालिकम् । आधिव्याधिमहाव्याधिमद्यतोपद्रवेऽपि च ।
अपमृत्युमहामृत्यू नाशयेच्चाक्रनायकः । परप्रत्युक्तमन्त्रांश्च यन्त्रतन्त्रविभञ्जनः ॥२१॥
सुदर्शनोऽयमस्माकं दुर्दशादुःखनाशनः । सर्वसंपत्प्रदाता मां चक्रराजो निरन्तरम्॥२२॥
जपं पातु जगद्वन्द्यो मानसामक्षयप्रदः । प्रमादांश्चास्त्रधामाऽसौ ज्ञानं रक्षतु सर्वदा ॥२३॥
अणिमादिमहैश्वर्यं पातु साम्राज्यसिद्धिदः । तिर्यग्ज्वालाग्निरूपश्च नष्टराज्यार्थदो मम ॥
राज्यं पातु सहस्रारः पादातिं पातु चाच्युतः । चतुरङ्गबलस्तोमं रक्ष त्वं चक्रभावन ॥
ज्योतिर्मयश्चक्रराजः सर्वान् वरुणरक्षकः । अखण्डमण्डितः पातु परचक्रापहारकः ॥२६॥
त्रिविक्रमश्चक्रराजः पातु धैर्यं सदा मम । नभो दशदिशव्याप्तिकीर्तिं पातु सुदर्शनः ॥
आयुर्बलं धृतिं पातु लोकत्रयभयापहः । सुधामण्डलसंविष्टो मायापञ्चसुशीतलः ॥२८॥
राजद्वारे सभामध्ये पातु मां चण्डविक्रमः । पूर्वे सुदर्शनः पातु आग्नेये पातु चक्रराट् ॥

याम्ये रथाङ्गकः पातु त्रिनेमिः पातु नैर्ऋते । लोकत्रयप्रभाकारज्वालो रक्षतु पश्चिमे ।।
षट्कोणः पातु वायव्ये ह्यस्त्रराजोत्तरां दिशम् ।ऐशान्यां चक्रराट्पातु मध्ये भूचक्रचक्रिणः।।
अनन्तादित्यसंकाशः क्ष्मान्तरिक्षौ च पातु मे । सर्वतो दिक्षु मे पातु ज्वालासाहस्रसंवृतः ।।
एवं सर्वत्र संरक्ष सर्वदा सर्वरूपवान् । सकारः पृथिवी ज्ञेयो हकारो अप उच्यते ।।३३।।
स्राकारो वायुरुक्तश्च रकारोऽम्बर उच्यते । हुं कारमग्निरित्याहुः फट्कारं सूर्यरूपकम् ।।
स्वाहाकारं न्यसेन्मूर्ध्नि पीतरक्तसुवर्णकम् । सकारं नासिकायां तु हकारं वदने न्यसेत् ।।
स्राकारं हृदये चैव सृष्टिसंहारकारणम् । रकारं विन्यसेत् गुह्ये हुंकारं जानुदेशके ।।
फकारं गुल्फदेशे तु टकारं पादयोर्न्यसेत् । सर्वाणि चैव वर्णानि जप्यान्यंगुलिपर्वसु ।।
क्षिप्रं सौदर्शनं चक्रं ज्वालामालातिभीषणम् । सर्वदैत्यप्रशमनं कुरु देववराच्युत ।।३८।।
सुदर्शन महाज्वाल छिन्धि छिन्धि सुवेदनाम् । परयन्त्रं च तन्त्रं च छिन्धि मन्त्रौषधादिकम्।।
सुदर्शनमहाचक्र गोविन्दस्य करायुध । सूक्ष्माधार महावेग छिन्धि छिन्धि सुभैरव ।।४०।।

छिन्धि पातं च लूतं च छिन्धि घोर महद्विषम् । इति सौदर्शनं दिव्यं कवचं सर्वकामदम् ॥
सर्वबाधाप्रशमनं सर्वव्याधिविनाशनम् । सर्वशत्रुक्षयकरं सर्वमङ्गलदायकम् ॥४२॥
त्रिसन्ध्यं विजयं नृणां सर्वदा विजयप्रदम् । सर्वपापप्रशमनं भोगमोक्षैकसाधनम् ॥४३॥
प्रातरुत्थाय यो भक्त्या पठेदेतत्सदा नरः । तस्य सर्वेषु कालेषु विघ्नः क्वापि न जायते ॥
यक्षराक्षसवेतालभैरवाश्च विनायकाः । शाकिनी डाकिनी ज्येष्ठा निद्रा बालग्रहादयः ॥४५
भूतप्रेतपिशाचाद्याः अन्ये दुष्टग्रहा अपि । कवचस्यास्य जप्तारं दृष्टमात्रेण तेऽखिलाः ॥४६॥
पलायन्ते यथा नागाः पक्षिराजस्य दर्शनात् । अस्यायुतं पुरश्चर्यं दशांशं तिलतर्पणम् ॥४७
हवनं तर्पणं चैव तर्पणं गन्धवारिणा । पुष्पाञ्जलिर्दशांशं च मिष्टान्नं संवृतप्लुतम् ॥४८॥
चतुर्विंशद्द्विजा भोज्या वैष्णवा वेदपारगाः । पञ्चसंस्कारसम्पन्नाः ततः कार्याणि साधयेत् ॥
विन्यस्यांगेष्विदं धीरो युद्धार्थं योऽभिगच्छति । रणे जित्वाऽखिलान् शत्रून् विजयीभवतिध्रुवम्



मन्त्रिताम्बु त्रिवारं वा पिबेत्सप्तदिनावधि । व्याधयः प्रविनश्यन्ति सकलाः कुक्षिसम्भवाः ॥

मुखप्रक्षालने नेत्रनासिकारोगनाशनम् । भीतानामभिषेकं च महाभयनिवारणम् ॥५२॥
सप्ताभिमन्त्रितानेन तुलसीमूलमृत्तिका । लेपान्नश्यन्ति ते रोगाः सद्यः कुष्ठादयोऽखिलाः ॥
ललाटे तिलकं स्त्रीणां मोहनं सर्ववश्यकृत् । परेषां मन्त्रयन्त्राणि तन्त्राण्यपि विनाशकृत् ॥
व्यालसर्पादिसर्वेषां विषापहरणं परम् । सौवर्णे रजते वापि भूर्जे ताम्रादिकेऽपि वा ॥५५॥
लिखित्वा त्वर्चयेद्भक्त्या स श्रीमान् भवति ध्रुवम् । बहुना किमिहोक्तेन यद्यद्वाञ्छति यो नरः

सकलं प्राप्नुयादस्य कवचस्य प्रसादतः ।

यदक्षरं पदभ्रष्टं मात्राहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां स्वामिन् प्रसन्नोऽस्तु सुदर्शन ॥

---

## अथ श्रीनारसिंह महामन्त्र प्रयोगः ।

हरिः ॐ अद्येत्यादि देशकालतिथिवारादि उच्चारण कर "अद्य मम वर्त्तमानशरीरस्थ कायिक वाचिक मानसिक भुक्ताभुक्त पीतापीत ज्ञाताज्ञात जन्मजन्मान्तरीय महापाप रूप सकल विधि रोग पीड़ा भूत प्रतादि दुष्ट ग्रहवाधादि सर्वारिष्ट शान्तये सर्वतोविजयारोग्यसमृद्धि-प्राप्तये च यथा संख्यैतद्दिनावधिपर्यन्तं श्रीनृसिंहमहामन्त्रैर्नित्यहवनमहं करिष्ये" । प्रसन्नतां यातु भगवान् नृसिंहः । श्रीनृसिंहमूलमन्त्रः--ॐ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥ ॐ सहस्रार हुं फट् । अष्टोत्तर शतं नित्यं जपेत् ।

अथ हवन मन्त्राः—ॐ आं ह्रीं क्षौं क्रौं हुं फट् ॐ उग्राय नमो ममाद्य वर्त्तमान व्याधि रूप सर्वारिष्ट नाशनाय ॐ आं ह्रीं क्षौं क्रौं हुं फट् स्वाहा ॥ १ ॥

इसी प्रकार से आद्यन्त वीज "ममाद्य वर्त्तमान के आगे जो रोग पीड़ा ग्रहवाधा शत्रु-शमन विजय" आदि पद लगाकर मन्त्र पूर्ण पढ़ कर हवन करें। हवन के लिए घी शक्कर पंचमेवा अथवा गौ दुग्ध की तस्मै घी मेवा मिलाके। अभाव में यव तिलादि से ही करें। जो सुलभ हो सो निम्नोक्त नव मन्त्रों से एक सहस्र १०८-७१-५४ ३६—२८ ( से कम न करें। २१-४१—७१ दिन जैसा कार्य हो वैसा हवन करें। मन्त्र यों है। ॐ उग्राय नमः स्वाहा। ॐ वीराय नमः स्वाहा। ॐ महाविष्णवे नमः स्वाहा। ॐ ज्वलन्ताय नमः स्वाहा। ॐ सर्वतोमुखाय नमः स्वाहा। ॐ नृसिहाय नमः स्वाहा। ॐ भीषणाय नमः स्वाहा। ॐ भद्राय नमः स्वाहा। ॐ मृत्युमृत्यवे नमः स्वाहा। 'ॐ आं ह्रीं क्षौं क्रौं हुं फट्। ॐ उग्राय वीराय महाविष्णवे ज्वलताय नृसिहाय भीषणाय भद्राय मृत्युमृत्यवे नमः ॐ आं ह्रीं क्रौं क्षौं हुं फट् स्वाहा'। इनका हवन जप जितेन्द्रिय आहार व्यवहार शुद्ध से करै। विशेष कर श्रीवैष्णव हो तो अति उत्तम हो। गुरुमुख से विधि जान लेवें तब करें। इस विधान से कठिन से कठिन रोगादि की शान्ति सहज ही में हो सकती है। विधि पूर्वक विश्वास भाव से १०८ हवन १० दिन करने से भयङ्कर ग्रहों को पीड़ा तथा भूत प्रेतादि बाधाओं से शीघ्र मुक्त होगा। इति

अस्य श्रीविष्णुकवचमहामन्त्रस्य । ब्रह्मा ऋषिः। गायत्री छन्दः । श्रीमहाविष्णुर्देवता । अच्युताय बीजम् । अनन्ताय शक्तिः । गोविन्दाय कीलकम् । श्रीमहाविष्णुप्रसादसिद्ध्यर्थे जपे विनियोगः । केशवाय अगुष्ठाभ्यां नमः । नारायणाय तर्जनीभ्यां नमः माधवाय मध्यमाभ्यां नमः । गोविन्दाय अनामिकाभ्यां नमः । विष्णवे कनिष्ठिकाभ्यां नमः । मधुसूदनाय करतलकरपृष्ठाभ्यां नमः । त्रिविक्रमाय हृदयाय नमः । वामनाय शिरसे स्वाहा । श्रीधराय शिखायै वषट् । हृषीकेशाय कवचाय हुम् । पद्मनाभाय नेत्रत्रयाय वौषट् । दामोदराय अस्त्राय फट् । भूर्भुवस्सुवरोमिति दिग्बन्धः । अथध्यानम्—

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

पूर्वतो मां हरिः पातु पश्चाच्चक्री च दक्षिणे । कृष्ण उत्तरतः पातु श्रीशो विष्णुश्च सर्वतः ॥
ऊर्ध्वं मां नन्दकी पातु अधस्ताच्छार्ङ्गभृत्सदा । पादौ पातु सरोजांघ्रिः जंघे पातु जनार्दनः ॥

जानुनी मे जगन्नाथः ऊरू पातु त्रिविक्रमः । गुह्यं पातु हृषीकेशःपृष्ठं पातु ममाव्ययः ।।
पातु नाभिं ममानन्तः कुक्षिं राक्षसमर्दनः । दामोदरो मे हृदयं वक्षः पातु नृकेसरी ।।
कुक्षौ मे कालियारातिःभुजौ भक्तार्तिभञ्जनः । कण्ठं कालाम्बुदश्यामःस्कन्धौ मे कंसमर्दनः।।
नारायणोऽव्यान्नासां मे कर्णौ केशिप्रभञ्जनः । कपोले पातु वैकुण्ठःजिह्वां पातु दयानिधिः।।
आस्यं दशास्यहन्ताऽव्यात् नेत्रे मे पद्मलोचनः । भ्रुवौ मे पातु भूमीशःललाटं मे सदाऽच्युतः।।
मुखं मे पातु गोविन्दः शिरोगरुडवाहनः । मां शेषशायी सर्पेभ्यःव्याधिभ्यो भक्तवत्सलः ।।
पिशाचाग्निजलेभ्यो मामापद्भ्योऽवतु वामनः । सर्वेभ्यो दुरितेभ्यश्च पातु मां पुरुषोत्तमः ।।
इदं श्रीविष्णुकवचं सर्वमङ्गलदायकम् । सर्वरोगप्रशमनं सर्वशत्रु विनाशनम् ।।
आपत्कालेषु पठताम् आत्मरक्षाकरं परम् । त्रिसन्ध्यं य.पठेच्छुद्धःसर्वत्र विजयी भवेत् ।।



श्रीमद्वानाद्रियोगीश्वरचरणयुगे सक्तचित्तं महान्तं,
कन्दादच्छ्रीनिवासादीधगतसकलज्ञानजातं गुणाढ्यम् ।
धन्यो रङ्गाधिपेऽस्मिं कलिमलदहने वेङ्कटेशेऽनुरक्तं
वन्देऽहं नित्यवन्द्यं शरणदममलं विज्ञवर्यं खगेन्द्रम् ।।

॥ श्री ॥

# श्रीसुदर्शनषट्कम्

सहस्रादित्यसंकाशं सहस्रवदनं प्रभुम् ।
सहस्रदं सहस्रारं प्रपद्येऽहं सुदर्शनम् ॥१॥

हसन्तं हारकेयूरमुकुटाङ्गदभूषणम् ।
भूषणैर्भूषिततनुं प्रपद्येऽहं सुदर्शनम् ॥२॥

स्राकारसहितं मन्त्रं पठन्तं शत्रुनिग्रहम् ।
सर्वदोषप्रशमनं प्रपद्येऽहं सुदर्शनम् ॥३॥

